पुष्पवासो विशाला भू स्तदूर्ध्वं मुनि पुंगव ! ।
दिव्यानां बहुपुष्पाणा मुद्यानं विद्धि नारद ! ॥९॥

हे मुनिश्रेष्ठ ! भोजवासा के आगे "पुष्पवास" नामक विशाल मैदान है। हे नारद ! उसे नाना प्रकार के अलौकिक और सुन्दर पुष्पों का बड़ा बगीचा जानो। (देशभाषा में इसे "फूलवासा" कहते हैं) ॥९॥

तत्र श्री गोमुखंस्थानं, साक्षाद्‌गंगावतार भूः ।
ऋषिभिर्बहुधा गीतं, पुण्यात् पुण्यतरं भुवि ॥१०॥

वहां साक्षात् गंगाजी की अवतार भूमि, ऋषिमुनियों द्वारा नाना प्रकार से कीर्तित, पृथ्वीभर में पवित्र से भी अत्यंत पवित्र श्री 'गोमुख' नामक स्थान है ॥ १० ॥

शैलशृंगै र्महोच्छ्रायै, र्वेष्टितं हिमशोभितैः ।
द्युलोक निकटस्थंवै, द्युलोकिभिरधिष्ठितम् ॥११॥

जो अत्यन्त ऊंचे बर्फसे ढंके हुए, विशाल पर्वत शिखरोंसे आवृत, देवलोकके समीपवर्ती और देवताओं से अधिष्ठित है ॥११॥

तत्र प्रालेयसंघात भूषिते भूविभूषणे ।
गोमुखे गोमुखाकार महातुहिन गह्वरात् ॥१२॥

बर्फके समूहसे भूषित और भूमिके विभूषण उस गोमुख स्थानमें गौके मुखके सदृश बर्फकी महान गुफासे ॥ १२ ॥

निर्गच्छति महावेगा, गंगा सुरतरंगिणी ।
पावनी पावनार्थाय, पृथ्वीलोक निवासिनाम् ॥१३॥

पुण्यवती, सुरनदी श्री गगाजी भूलोकके निवासियोंको पावन करते के लिये महान वेगवती होकर निकल रही है।। १३ ।।

देवखातबिले तत्र, दुर्गा द्दुर्गतरेऽपि यः ।
गत्वा तु जाह्ववीतोये, बिधिवत् स्नान माचरेत् ।।१४।।

दुर्गम से दुर्गम होनेपर भी, जो उस देवनिर्मित गुफामें ह जाकर गङ्गाजलमें विधिपूर्वक स्नान करते हैं ॥ १४ ॥

अवश्यं तस्यवै पुत्र ! पुनर्जन्म न विद्यते ।
नात्र शंका विधातव्या, प्रतिजाने प्रियोऽसिमे ।।१५।।

हे पुत्र ! अवश्यही उनका पुनर्जन्म नहीं होता। इसमें तनि भी संदेह करना योग्य नहीं। मैं प्रतिज्ञा के साथ कहता हूं। क्योंकि तु मुझे अति प्रिय हो ! ॥ १५ ॥

गोमुख्यां तत्र विख्याते, सूर्यकुण्डे निमज्जति ।
नीलनीरदवर्णाढये, यस्स सूर्यवदुज्ज्वलेत् ।।१६।।

इसी गोमुख स्थानमें जो पुरुष नीलमेघके समान रंगवा विख्यात सूर्यकुण्डमें स्नान करते हैं; वह सूर्य के सदृश कान्ति वा होते हैं ॥ १६ ॥

तत ऊर्ध्वं तु भूमीद्ध्रा, मर्त्य संचार दूरगाः ।
आच्छन्नाः संततस्थायि घनोत्तुंगमहाहिमैः ।।१७।।

उसके आगे पर्वत समूह सदा स्थिर रहनेवाले अति सघन अ ऊंचे महान बर्फोंसे ढके रहते हैं, इसलिये वे मनुष्यकी गति रहित हैं ॥१७॥

**गोमुखीतो विशालापू, र्नातिदूरे विराजते ।**
**तत्रायं गमने मार्गः सिद्धानां चामृतांधसाम् ॥१८॥**

गोमुखीस्थानके पास ही बदरीपुरी विराजमान है। वहां जानेके लिये यह सिद्ध और देवताओंका मार्ग है, यानी मनुष्यकी गति रहित उन पर्वतशिखरोंद्वारा सिद्ध और देवता लोग जाते हैं॥ १८॥

नारद उवाच ।

**माहात्म्यं जाह्नवीजन्मभुवः श्रीगोमुखस्य यत् ।**
**लोकेश कृपया किंचिद्विस्तरेण वद प्रभो ! ॥१९॥**

नारदजी बोले :—श्रीगंगाजी की जन्मभूमि, श्रीगोमुखका जो माहात्म्य है, उसे हे लोकों के स्वामी ! हे प्रभो ! कृपा करके कुछ विस्तार पूर्वक कहिये !॥ १९ ॥

ब्रह्मोवाच ।

**शृणुमे सम्प्रवक्ष्यामि, यत्पृष्टं प्रियदर्शन ! ।**
**वैशिष्टच्यं गोमुखीयं वै, गोप्य मेतत् सनातनम् ॥२०॥**

हे प्रियदर्शन ! तुमने जो गोमुखका माहात्म्य पूछा है, उसे मैं सम्यक् प्रकारसे कहता हूं। मेरे वचन सुनो ! यह सनातन रहस्य गुप्त रखने योग्य है॥ २०॥

**क्रीडारंगंश्रियः साक्षाद्, गोमुखी लेख सस्तुता ।**
**गोवक्त्राभ हिमग्रावच्छिद्रतोऽन्वर्थनामिका ॥२१॥**

देवताओं द्वारा कीर्तित गोमुखीस्थान, साक्षात् लक्ष्मीकी क्रीड़ाभूमि और गौके मुखके समान हिमपाषाणकी गुफा होनेसे अनुरूप नामवाला है॥ २१॥

श्रीशैलहिमकूटैर्या, भासिता सर्वतो दिशि ।
स्वयं च सुभगोत्तुंग हिमानीकृतभूषणा ॥२२॥

जो सब ओरसे श्रीशैल नामक पर्वतके हिमशिखरोंसे प्रकाशि है; और स्वयंसुन्दर एवं ऊंचे हिम समूहोंका आभूषण किये हुए है ॥२२

तथाह्नि कलधौताभैः सायञ्च कनकप्रभैः ।
प्रहर्षयति या चित्तं, पर्वताग्रै रलौकिकैः ॥२३॥

और जो दिनमें चांदीके प्रकाशवाले और सायंकाल में सुवर के प्रकाश वाले, दिव्य पर्वत शिखरों से चित्त को अत्यन्त आह्लादि करता है ॥ २३ ॥

किमयं तपनीयाद्रिः, किंवा रजत पर्वतः ।
इति संदेहतो यत्र, बाढ़ं मुह्यंति मानवाः ॥२४॥

क्या यह सोनेका पर्वत है, या चांदी का पर्वत ? इस प्रक के महान सन्देहसे जहां मनुष्य अत्यन्त मोहित हो जाते हैं ॥ २४ ॥

अहो ! दिव्या दिव्यकान्तिच्छटाच्छन्न दिगंतरा ।
भ्राजते साऽचलाधीश मूर्द्धोत्तंसमहामणिः ॥२५॥

अहो ! जो दिव्य और हिमालयके शिरोभूषणका अमूल्य रत्न और अपने अलौकिक कान्ति पुंजसे दिशाओंके मध्य को व्याप्त कि हुए अत्यन्त दीप्यमान है ॥ २५ ॥

देवसेव्यश्च तत्स्थानं दैवतानां च दुर्लभम् ।
महापुण्य महोपुण्यपूरुषैरवलोकितम् ॥२६॥

अहो ! वह स्थान देवताओं द्वारा सेवनीय, देवताओं को भी दुर्लभ और महापुण्य जनक है; जिसे कि पुण्यात्मा लोगोंने अवलोकन किया है ॥ २६ ॥

**अगहनगहनं वै, लताविटपिवर्जितम् ।**
**प्रशांतमतिगंभीरं, विशालं ग्राव संकुलम् ॥२७॥**

वह वनोंसे दुर्गम नहीं है अर्थात् वन रहित है और लता वृक्षों से रहित है। प्रशांत और अत्यन्त गम्भीर है। विशाल है और पत्थरों से अति संकीर्ण है ॥ २७ ॥

**निकटस्थ बृहच्चर्मिवनशोभाविशोभितम् ।**
**पक्षिभिः सुस्वरैर्नाना रूपवर्णैश्च मण्डितम् ॥२८॥**

समीपमें ही स्थित महान भोजपत्रके वनकी शोभासे शोभायमान, तथा मधुर स्वरवाले और नाना प्रकार एवं नाना रंगवाले मनोहर पक्षियोंसे अलंकृत है ॥ २८ ॥

**कृष्णरक्तैः श्वेत पीतैः पुष्पै र्दिव्य मनोहरैः ।**
**इन्द्राणी केश भूषाभिः समाच्छन्नं समन्ततः ॥२९॥**

इन्द्राणी के केशोंके भूषण, तथा दिव्य, मनको हरने वाले श्याम, लाल, श्वेत और पीले पुष्पोंसे सर्वत्र आच्छादित है ॥ २९ ॥

**कस्तूर्याद्यै र्विचित्रैश्च, मृगभेदैरनद्भुतैः ।**
**सर्वदाऽद्ध्युषितं दिव्यैः स्वच्छन्द मकुतोभयम् ॥३०॥**

कस्तूरीमृग, बरड आदि नाना प्रकार के अलौकिक और अति अद्भुत जंगली पशु, स्वतन्त्र और भय रहित होकर वहां सभी समय निवास करते हैं ॥ ३० ॥

अहो तत्रत्य सुषमां, कोवा वर्णयितुं प्रभुः ।
इन्द्रोप्यक्षिसहस्रेण, यां विलोक्य न तृप्यति ॥३१॥

अहो ! वहांकी प्राकृतिक शोभाका वर्णन करनेमें कौन समर्थ है ? जिसको अपने सहस्र नेत्रों से देखकर इंद्र भी तृप्त नहीं होता ॥३१॥

नैतत् केवल मक्षाणां, सदैवाह्लादकं मुने ! ।
सर्वपुण्यमहातीर्थ मूर्द्धभूषेति विद्धितत् ॥ ३२ ॥

हे मुने ! यह स्थान केवल सदा इन्द्रियों को सुख प्रदान करने वाला ही नहीं, किन्तु उसे सर्व महान् पुण्य तीर्थों का शिरो भूषण जानो ! ॥३२॥

सकृदेवात्र गमना, द्दर्शनात् सर्व किल्विषम् ।
समूलं विलयं याति, वाञ्छितार्थ मवाप्नुयात् ॥३३॥

एकवार भी इस स्थान पर जाकर दर्शन करनेसे सब पाप समूल विनष्ट हो जाते हैं और शीघ्रही अभीष्ट अर्थकी प्राप्ति होती है ॥३३॥

यदि तत्रत्यगंगांभोबिन्दु मेकमपि स्पृशेत् ।
यत्रकुत्राऽपि निवसन् , पुमान् याति सुरालयम् ॥३४॥

यदि वहां के गंगाजलका एक बिन्दु भी स्पर्श करे तो जहां तहां कहीं भी निवास करने वाला मनुष्य भी देवलोकको प्राप्त होता है ॥३४॥

हरिणापि हरेणापि, मया मघवतापि च ।
असकृत् सेवितं तीर्थं, श्रद्धेयं श्रद्धया मुने ! ॥३५॥

हे मुने ! स्वयं विष्णुने, शिवजीने, इन्द्रने और मैंने भी श्रद्धा करने योग्य इस तीर्थका श्रद्धापूर्वक अनेक बार सेवन किया है ॥३५॥

**अहो ! मुनिवरास्तत्र, गत्वा ब्रह्मविचिन्तने ।**
**मज्जंति दिव्यसुषमा समाकृष्टधियो बलात् ॥३६॥**

अहो ! उत्तम मननशील पुरुष वहां जाकर, प्रकृतिकी उस दिव्य अनुपम शोभासे हठात् अत्यन्त आकृष्टचित्त होकर ब्रह्मचिन्तन में निमग्न हो जाते हैं ॥३६॥

**हेतुज्ञानं फलज्ञानात्, परीक्षकमतं खलु ।**
**तथा च प्राकृताभिख्यादर्शनाद्ब्रह्मसंस्मृतिः ॥३७॥**

कार्यके ज्ञानसे उसके कारणकी स्मृति होती है; यह दार्शनिकों का मत है। इसी प्रकार प्राकृतिक कान्ति के दर्शन से उसके कारण ब्रह्मकी स्मृति होती है ॥३७॥

**तन्निर्मातुः स्मृति यद्वन्महार्हगृहदर्शने ।**
**अकृतं वस्तुविस्तारं, दृष्ट्वा वै दिव्यमद्भुतम् ॥३८॥**

महान सुन्दर महलके दर्शनसे जैसे उसके बनाने वाले की स्मृति होती है, जो मनुष्य द्वारा नहीं बनाये गये ऐसे अलौकिक एवं अद्भुत पदार्थों की महिमा देख कर ॥३८॥

**तत्कर्तु रीश्वरस्यापि, तद्वदुत्पद्यते स्मृतिः ।**
**ततः किं मद्भुतं तत्र, मज्जंतीशीति सज्जनाः ॥३९॥**

वैसेही उसके कर्त्ता ईश्वरकी स्मृति उत्पन्न होती है। इस लिये वहां यदि मननशील मनुष्य ब्रह्ममें निमग्न हो जाते हैं, तो इसमें क्या आश्चर्य है ? ॥३९॥

सौन्दर्यं ब्रह्मणो रूपं प्रकृत्यामनुवर्तते ।
प्रकृतेर्नास्ति सौन्दर्यं स्वस्वरूपात्मको गुणः ॥४०॥

सौन्दर्य ब्रह्मका ही स्वरूप है। ब्रह्मका सौन्दर्य प्रकृति में अनुगत होता है। सौन्दर्य प्रकृति के अपना स्वरूप भूत गुण नहीं है ॥४०॥

सत्यानाञ्च महासत्यं चेतनानाञ्च चेतनम् ।
ब्रह्म विद्धि जगद्बीजं सुन्दराणाञ्च सुन्दरम् ॥४१॥

सब सत्यों का महासत्य, चेतनों का भी चेतन, एवं सुन्दरों का भी सुन्दर, इस जगत का बीज भूत ब्रह्म ही है, यह जानो ॥४१॥

आनन्दयति तत्तादृग् ब्रह्मैव परमाततम् ।
प्रकृतिद्वारतः सर्वान् यथास्वंहि जनुष्मतः ।४२॥

सबके अधिष्ठान, व्यापक, तादृश ब्रह्म ही प्रकृति के द्वारा सब प्राणियों को यथायोग्य आनन्दका प्रदान करते हैं ॥४२॥

एवं ब्रह्मण एवैषा न स्वस्याः प्रकृतेर्द्युतिः ।
इति साक्षात्प्रपश्यन्ति ब्रह्मतत्त्व विशारदाः ॥४३॥

इस प्रकार परब्रह्म की ही यह शोभा है। प्रकृति की अपनी शोभा नहीं है। ब्रह्मतत्त्वको जानने वाले इसका साक्षात् अनुभव करते हैं ॥४३॥

तादृशा स्तादृशे स्थाने ब्रह्मसौन्दर्य दीपिते ।
ब्रह्म सम्पत्तिमायान्ति भावाविष्टधियोबलात् ॥४४॥

ब्रह्म सौन्दर्य से शोभित ऐसे स्थानों में ब्रह्मवित् लोग भावाविष्ट होकर जबरन ब्रह्म समाधिको प्राप्त हो जाते हैं ॥४४॥

अहो ! पुण्य महो ! पुण्यं, गोमुखी दर्शनं मुने ! ।
पुण्यात्मा धन्यधन्यो यः सएव लभते हि तत् ॥४५॥

हे मुने ! गोमुखका दर्शन अति अद्भुत और अत्यन्त पुण्य-दायक है, जो पवित्रात्मा अत्यन्त ही धन्य है, वे ही उसको प्राप्त करते हैं ॥४५॥

गोमुखीदर्शनं तत्र, स्नानं च बहुशोभनम् ।
फलं ददाति भक्तेभ्यो, दृष्टं चादृष्ट मेव च ॥४६॥

गोमुखका दर्शन और वहांका स्नान भक्तोंको ऐहिक एवं पारलौकिक सर्व प्रकारका अत्यन्त श्रेष्ठ फल देता है ॥४६॥

बहुना किमिहोक्तेन, गुह्याद्गुह्यतरं शृणु ! ।
गोमुखीसदृशं तीर्थं, भुवि नान्यत्र विद्यते ॥४७॥

इस विषयमें बहुत कहनेसे क्या ? गोप्यसे भी अत्यन्त गोप्य सुनो ! गोमुखके सदृश तीर्थ भूलोकमें अन्यत्र नहीं है ॥४७॥

यानि प्रोक्तानि वै स्थाना, न्यत्र तुभ्यं मुनीश्वर ! ।
श्रद्धया तानि सर्वाणि, सेवितव्यानि मानवैः ॥४८॥

हे मुनिश्रेष्ठ ! जितने स्थान तुम्हारे प्रति वर्णन किये हैं, वे सभी मनुष्यों द्वारा श्रद्धापूर्वक सेवन करने योग्य हैं ॥४८॥

धन्यातिधन्य मन्यच्च, स्थानं यद्यदधस्तनम् ।
श्रूयतां सावधानेन मनसा श्रद्धयाऽपि च ॥४९॥

इनके सिवाय जो और भी धन्यसे भी अत्यन्त धन्य नीचेके स्थान हैं, उनको सावधान मनसे श्रद्धापूर्वक सुनो ॥४९॥

गौरीकुण्डाच्च नीचैः श्री भैरव स्थान मुत्तमम् ।
भैरवोभैरवाकार, स्तत्र सेव्यो महाबलः ॥५०॥

गौरीकुण्डसे नीचे अति उत्तम श्रीभैरवजी का स्थान है। वहां भयानक आकृतिवाले महाशक्तिशाली श्री भैरवजी सेवन करने योग्य हैं ॥५०॥

ततोधस्ताच्च गम्भीरं, स्थान मत्यंतशोभनम् ।
संगता यत्र कृष्णांगी जह्नु गंगा च गंगया ॥५१॥

और उससे भी नीचे अत्यन्त सुन्दर, गम्भीर स्थान है, जहां श्यामसुन्दरी जह्नु गंगा श्रीगंगाजी के साथ मिली है ॥५१॥

जह्नु गंगातटेनोद्ध्वं, गच्छन्तो मुनिसत्तम ! ।
लभंते बहुतीर्थानि, दिव्यान्यंहोहराणि च ॥५२॥

हे मुनीश्वर ! जह्नु गंगाके किनारे ऊपर की ओर जानेवाले मनुष्य, पापको हरनेवाले अनेकों दिव्य तीर्थ प्राप्त करते हैं ॥५२॥

यियासवोऽनया सृत्या, कलधौतशिलोच्चयम् ।
यान्ति साक्षाच्छिवावासं, दर्शनात् संसृतिच्छिदम् ॥५३॥

साक्षात् शिवजीके निवासस्थान और दर्शनसे ही सम्पूर्ण संसार-बंधको नष्ट करनेवाले रजतगिरि कैलाश को जाने वाले लोग इस मार्गसे जाते हैं। ( इस कैलाशमार्गको "नीलङ् पास" कहते हैं ) ॥५३॥

तस्याभ्यर्णतएव श्रीजह्नो राश्रमभूमुने ! ।
यत्र स्थित्वा तु राजर्षि, श्चचार परम तपः ॥५४॥

हे मुने ! उस संगमस्थानके समीप ही श्रीजह्नु महर्षिका आश्रम-स्थान है। जहां निवास करके राजर्षि श्री जह्नुजीने अत्यन्त कठिन तपस्या की थी। ( इस स्थानको "जांगला" कहते हैं ) ॥५४॥

**तस्याभ्यर्णे भुवि श्रीमत् कुंकुमाख्या सरिद्वरा ।**
**शृणु भद्रतटे यस्या, वीरभद्रो विराजते ॥५५॥**

सुनो, उसके नीचे थोड़ी दूर पर कुंकुम नाम की मनोहर जल धारा है, जिसके रमणीक तटपर श्री वीरभद्र विराजमान हैं ! (इस धाराको "गुंगुम नाला" कहते हैं ) ॥५५॥

**तत्पार्श्वे च महत् स्थानं, यत्रदेवी विराजते ।**
**चंडेश्वरी महाकाली. चंडमुण्ड विमर्दिनी ॥५६॥**

और उसकी बगलमें एक महान् स्थान है, जहां चण्ड, मुण्ड, दैत्योंका विनाश करने वाली महाकाली चण्डेश्वरी देवी विराजती है ॥५६॥

**तत्रैव च महारम्या, धारा पुण्यप्रदा मुने ! ।**
**देव गंगा समाख्याता, दैवतैरुपसेविता ॥५७॥**

हे मुने ! उसी जगह सुरम्य पुण्यदायिनी और देवताओं द्वारा सेवित देवगंगा नामकी विख्यात जलधारा है। ( इसे भी देशभाषामें "देवघाट" कहते हैं ॥५७॥

**ततोऽपि पृष्ठतः स्थानं, मार्कण्डेयस्य नारद ! ।**
**विशालपुलिनोपान्ते, दर्शनीयं समंततः ॥५८॥**

हे नारद ! इस धाराके पीछे गंगाजीकी विशाल रेतीके समीप सब ओरसे अत्यन्त सुन्दर, दर्शनीय मार्कण्डेय मुनिका मनोहर स्थान है। ( यह "मार्कण्डेय" नामसे प्रसिद्ध है ) ॥५८॥

**मतंगोऽपि मुनिश्रेष्ठ, स्तत्रैव बहुवत्सरान् ।**
**तपस्तेपेऽनिलाहारः, सिद्धिं चेयाय निस्तुलाम् ॥५९॥**

इसके पास ही मुनि श्रेष्ठ मतंग ऋषिने केवल वायुभक्षण

करके अनेकों वर्ष तक तपस्या की थी और अतुल सिद्धिको भी लाभ किया था। (इस स्थानको "मखवा" कहते हैं) ॥५९॥

**गंगोत्तरं गन्तुकामा, धर्मजाग्र्याश्च तद्भुवि ।**
**बहुतमीर्वसन्तोंऽम्बां, पूजयामासु रास्तिकाः ॥६०॥**

गंगोत्तरी जानेवाले युधिष्ठिर आदि पांडवोंने उस स्थानपर अनेक रात्रि निवास करते हुए आस्तिकता और प्रेमपूर्वक श्री गंगाजीका अर्चन किया था ॥६०॥

**वायुपुत्र समानीता, वायुवेगा महानदी ।**
**पुनात्येतन्मुनिपदं वहन्ती मद्धयतो दिशि ॥६१॥**

वायुपुत्र भीमसेनकी लाई हुई वायुके तुल्य वेगवाली जलकी महान धारा मध्य भागमें बहती हुई इस मुनि स्थानको पवित्र करती है। (इसको "भीमधारा कहते हैं") ॥६१॥

**पांडवाश्वखुराणाञ्च, चिह्नमश्मतलेऽङ्कितम् ।**
**पुण्यपुंमात्र सुलभं, प्रपश्यात्र महाद्भुतम् ॥६२॥**

यहां पुण्यात्मा पुरुषोंको ही प्राप्त होने वाले, अत्यन्त आश्चर्य दायक, पाषाण पर अंकित हुए पांडवोंके घोड़ेके खुर चिन्होंका दर्शन करो ॥६२॥

**सर्वसंपत्करं ह्येतत्, सद्म सत्याधिरोहणी ।**
**अंबायाः प्रियवेश्मैतत्, प्रियंदिविषदा मपि ॥६३॥**

यह स्थान सब संपत्तिको देनेवाला और ब्रह्मलोक की सीढ़ी है। यह श्रीगङ्गामाता जी का प्रिय निवास स्थानहै और सदैव देवताओंको भी अति प्रिय है ॥६३॥

**मठाना मपि सर्वेषां, पृथिवीपृष्ठवर्तिनाम् ।**
**गंगा निकेतनं ह्ये तन्मुख्यो मठ इतीष्यते ॥६४॥**

पृथ्वीपर वर्तमान सब मठों में गंगाजीका यह निवास स्थान मुख्य मठ माना जाता है। ( इसलिये यह "मुखी मठ" नामसे भी प्रसिद्ध है ) ॥६४॥

**भगीरथ तपः स्थाने, यादृक् स्यात्कर्मणः फलम् ।**
**तादृगेव फलं विद्धि, मार्कण्डेय तपः स्थले ॥६५॥**

भगीरथके तपस्थान गंगोत्तरीमें जितना दानादि पुण्यकर्मोंका फल होता है, उतना ही फल इस मार्कण्डेयके तपस्थानमें भी जानो ॥६५॥

**स्नान तर्पण दानादि सत्क्रियाः शास्त्रचोदिताः ।**
**सुव्रतेऽत्रापि कर्तृणां, फलं महदभीप्सितम् ॥६६॥**

यहां भी शास्त्र विहित स्नान, तर्पण दान आदि सब शुभ क्रियायें, उन्हें करनेवालेको महान् अभीष्ट फलप्रदान करती है ॥६६॥

**शिला तत्र महापुण्या, विशाला मुनिसेविता ।**
**दर्शनेन विशीर्यंते, प्राक्कृताः कर्म कोटयः ॥६७॥**

वहां महान पुण्य प्रद, मार्कण्डेय मुनिसे सेवन की हुई, विशाल शिला है, जिसके दर्शनसे पूर्व किये हुए असंख्यों पापकर्म नष्ट हो जाते हैं ॥३७॥

**अन्नवासोवितरण, मस्मिन् स्थाने विशिष्यते ।**
**तन्महाश्मनि विप्राद्या, स्तर्पणीया यथाविधि ॥६८॥**

इस स्थानपर अन्न, वस्त्र आदिका दान अतिश्रेष्ठ है। तथा उस पवित्र शिलापर बैठाकर ब्राह्मणादिकों को विधि पूर्वक भोजन आदि से तृप्त करना उचित है ॥६८॥

**मार्कण्डेयपुरे गंगामातुराराध्यसंनिधौ ।**
**रात्रिवासी वसेद्गत्वा, वसत्यां कृत्तिवाससः ॥६९॥**

मार्कण्डेयपुरीमें श्री मातेश्वरी गंगाजीकी पूज्य सन्निधिमें एक रात्रि भी रहनेवाला, मरनेके पश्चात् अवश्य ही शिवलोकमें वास करता है ॥ ६९ ॥

**महर्षयो मस्करीन्द्रा, स्तथा मातृपदाब्जयोः ।**
**अनुरक्ता विरक्ताश्च, वसन्त्यत्र विशेषतः ॥७०॥**

महर्षि और श्रेष्ठ संन्यासी जन, श्रीगंगाजीके चरणकमलोंके अनुरागी तथा अत्यन्त तीक्ष्ण वैराग्यवान् भी यहां विशेष कर निवास करते हैं ॥ ७० ॥

**दक्षयागे सतीदाहः, संपन्न स्तदनंतरम् ।**
**पुत्रीरूपेण सादेवी, हिमाद्रे र्दैवतात्मनः ॥७१॥**

दक्षजीकी यज्ञमें सतीजी भस्म हो गई थीं । उसके पश्चात् देवतात्मा हिमालयकी पुत्री रूपसे, ॥ ७१ ॥

**संजाता यत्र रुद्राणी, सर्वाम्बा सर्वनायिका ।**
**नातिदूरे च तत्स्थानं, वत्स ! दिव्य मनुत्तमम् ॥७२॥**

सारे जगत्की माता और सबकी अधीश्वरी साक्षात् शिव-पत्नी वह देवी जहां उत्पन्न हुई थी; हे पुत्र ! वह दिव्य और अति उत्तम स्थान इस मतंगस्थानके पास ही स्थित है । ( इसे देशभाषामें "कच्चोरा" कहते हैं ) ॥ ७२ ॥

**हरिप्रयाग इत्येतत्, तीर्थं पश्य समीपतः ।**
**स्नात्वा तस्मिन्कुवृत्तोऽपि, हरिलोक मवाप्स्यति ॥७३॥**

उसके समीप ही "हरि प्रयाग" नामक तीर्थको देखो ! जिसमें स्नान करके अत्यन्त दुराचारी भी विष्णुलोकको प्राप्त होते हैं। ( यह "हरसल" नामसे प्रसिद्ध है ) ॥ ७३ ॥

**गुप्तप्रयाग इत्यन्यद्, गुप्त मेतन्महीतले ।**
**अध ऊर्ध्वश्च सप्तानां, गुप्ताघौघनिबर्हणम् ॥७४॥**

उसीके पास "गुप्तप्रयाग" नामक एक और तीर्थ भी है। पहले की सात पीढ़ियोंके पितरोंके तथा आगामी सात पीढ़ियोंमें होनेवालोंके गुप्त पाप समूहको नष्ट करने वाला यह तीर्थ, पृथ्वी पर अत्यन्त गुप्त है ( इसे भाषामें "कुतिघाट" कहते हैं ) ॥ ७४ ॥

**श्यामगंगांबुसंगोऽपि, दृश्यतां तस्य पार्श्वतः ।**
**देदीप्यतेऽङ्ग ! यो दिव्य विशालपुलिनश्रिया ॥७५॥**

हे पुत्र ! उसकी बगलमें भागीरथीके साथ श्यामगंगाके जलका संगम भी देखो ! जो अलौकिक और सुन्दर विशाल रेती के मैदानकी शोभासे देदीप्यमान है। ( इसे "श्यामघाट" कहते हैं ) ॥ ७५ ॥

**दर्शनात् स्पर्शनात् स्नानात्संपद्ब्रह्मोत्तरोत्तरम् ।**
**श्रद्धया सेवनीयं वै, सर्व मेतद्यथाविधि ॥७६॥**

दर्शनसे, स्पर्शनसे और स्नानसे यह उत्तरोत्तर ऐश्वर्य बढ़ाने वाला है। इस प्रकार ऊपर कहे हुए ये सब तीर्थ श्रद्धासे विधिपूर्वक सेवन करने योग्य हैं ॥ ७६ ॥

**वामभागे च गंगाया, वरीवर्ति महत्पदम् ।**
**विश्वनाथपुरी साक्षा, द्विश्वेशो यत्र राजते ॥७७॥**

गंगाजीके बाँये किनारे महान् सुन्दर स्थान विश्वनाथपुरी विद्यमान है; जहां साक्षात् विश्वेश्वर विराजते हैं ( यह "धराली" नामसे प्रसिद्ध है ) ॥ ७७ ॥

**अस्ति यत्र महाभागा, धारा चोत्तरवाहिनी ।**
**श्रीकंठ निःसृता हत्याहारिणीति सुविश्रुता ॥७८॥**

जहां श्री कंठ पर्वतसे निकली हुई, उत्तरवाहिनी महान् माहात्म्य शालिनी "हत्याहारिणी" नामसे प्रसिद्ध जलधारा है ॥ ७८ ॥

**उषित्वातु निशामेका, मत्र यः श्रद्धयान्वितः ।**
**त्रिवेण्यां स्नाति वै तस्य, दह्यते पातकं महत् ॥७६॥**

जो यहांपर श्रद्धायुक्त होकर एक रात्रि भी निवास करके, भागीरथी, देव गंगा और हत्याहारिणी इन तीनोंके विचित्र संगमस्थान त्रिवेणीमें स्नान करते हैं, उनके महापातक भी नष्ट हो जाते हैं ॥ ७६ ॥

**क्षीर गंगा समायोगो, गंगया यत्र तत्पुरे ।**
**तत्राप्यत्युत्तमे तीर्थे, स्नातव्यं भूतिमिच्छता ॥८०॥**

उसी पुरी में जहां गंगाजीके साथ क्षीरगंगा ( यानी दूध गंगा ) का संगम है, इस उत्तम तीर्थमें भी ऐश्वर्यकी इच्छा वाले पुरुषको स्नान करना चाहिये ॥ ८० ॥

**जयन्त्यन्याश्च गंगायाः कूलयोरुभयोरपि ।**
**पुण्यदाः पुण्यचरिताः, सरितोऽनेक संख्यया ॥८१॥**

गंगाजीके दोनों किनारोंपर और भी अनेकों पुण्यदायिनी और पुण्य चरित्र वाली जलधाराएँ विराजमान है ॥ ८१ ॥

**तस्योपरि महाशृंगं, श्रीकंठं पश्य वै मुने ! ।**
**साक्षाच्छ्रीकण्ठसदनं, वैकुण्ठादिनिषेवितम् ॥८२॥**

हे मुने ! उसके ऊपर श्री कंठ नामक महान् सुन्दर पर्वतके

शिखरको देखो ! वह साक्षात् शिवजीका निवासस्थान और विष्णु आदि देवताओं द्वारा सेवित हैं ॥ ८२ ॥

**सर्व मेतन्महत्स्थानं, पुण्यात् पुण्यतरं भुवि ।**
**मुनीनां रम्य निलयः, साक्षाद्गंगाविहारभूः ॥८३॥**

यहां कहे हुए सब स्थान भी भूमंडलमें अत्यन्त श्रेष्ठ और पवित्रसे भी पवित्रतर हैं। मुनियोंके रमणीक निवास स्थान हैं, और साक्षात् गंगाजीकी विहार भूमि है ॥ ८३ ॥

**गंगोत्तर्याश्च गंगाया, माहात्म्यं निस्तुलं परम् ।**
**वर्णनंतस्य सम्पूर्णं, कर्तुं कः प्रभवेन्मुने ! ॥८४॥**

हे मुने ! गंगोत्तरी और गंगाजीका माहात्म्य अति श्रेष्ठ, अतुल और अपार है। उसको पूरा २ कथन करनेमें कौन समर्थ हो सकता है ॥ ८४ ॥

**लब्ध्वा तु मानुषं देहं, न कुर्यात्सांपरायिकम् ।**
**योऽत्र हन्त स वैधेयः काक वद् व्यर्थ जीवनः ॥८५॥**

इसलोकमें मानवशारीर मिलकर भी जो परलोक संबन्धी पुण्य कर्म आदि नहीं करता, वह मूर्ख काकके तुल्य निरर्थक जीवन विताता है ॥ ८५ ॥

**देहादस्ति परो ह्यात्मा देहान्ते तस्य का गतिः ।**
**इति चिन्तयितुं जन्तुः कः प्रभुर्मनुजेतरः ॥८६॥**

देह से भिन्न आत्मा है, देह के अन्त में उस की क्या गति होगी ? इस प्रकार विचार करने में मनुष्य से अन्य कौन प्राणी समर्थ होता है ॥ ८६ ॥

आहार पशु कर्मादि भोगेष्वधिक मोदनम् ।
पुंबुद्धे रर्थ्य मानश्चेन्न पुमान् स महान् पशुः ॥८७॥

आहार, मैथुन आदि भोगों में अधिक अधिक आनन्द करना ही मनुष्य बुद्धि का परम अभीष्ट हो तो, फिर वह मनुष्य नहीं, महान पशु है ॥ ८७ ॥

किं मे श्रेयः किमश्रेयो विचार्येदं नृदेहिना ।
श्रेयोमार्गेषु नितरां चरितव्यं सुमेधसा ॥८८॥

मेरा क्या श्रेय है, क्या अश्रेय है, इस का विचार करके बुद्धिमान पुरुष सदा श्रेयो मार्गों में ही प्रवृत्ति करें ॥ ८८ ॥

ब्रह्मनिष्ठैव सर्वेषां श्रेयसां श्रेय उत्तमम् ।
विषयासंग संत्यागात् प्राप्यतेऽब्धाकटाक्षतः ॥८९॥

ब्रह्ममें निष्ठा ही सब श्रेयों में महान श्रेय है। विषयासक्ति के परित्याग से, तथा जगन्माता श्रीगंगाजी के अनुग्रह से यह ब्रह्मस्थिति प्राप्त होती है ॥ ८९ ॥

देशकालादि परिधिरहंत्वमिति भेद धीः ।
भोक्ता भोग्य मिति द्वैतं यत्र न ब्रह्म तत्परम् ॥९०॥

देश काल आदिके परिच्छेद, "मैं, तुम" इस प्रकार की भेद बुद्धि, एवं भोक्ता, भोग्य इस प्रकार के द्वैत भी जहां नहीं रहते, वह परब्रह्म है ॥ ९० ॥

सूर्यचन्द्रौ च नक्षत्राण्यहोरात्रादि यत्र नो ।
न च शून्यं न चाशून्य मद्भुतं ब्रह्म तत्परम् ॥९१॥

सूर्य, चन्द्र और नक्षत्र, तथा दिन रात आदि भी जहां नहीं हैं, जो शून्य भी नहीं, अशून्य भी नहीं वह आश्चर्य वस्तु परब्रह्म है ॥९१॥

न योषा न पुमान् षण्डो न च मूर्त मममूर्तकम् ।
न च तादृङ् न चैतादृक् तादृशं ब्रह्म तत्परम् ॥६२॥

जो स्त्री नहीं, पुरुष नहीं, नपुंसक भी नहीं, साकार नहीं, निराकार भी नहीं, जो परोक्ष नहीं, अपरोक्ष भी नहीं, जो उस प्रकार का है, वह परब्रह्म है ॥ ६२ ॥

ब्रह्म सत्य मसत्सर्वं नेतोऽन्यत्स्वप्नसन्निभम् ।
देशकालादिकलना कलितं यदिदं जगत् ॥६३॥

ब्रह्ममात्र सत्य है, अन्य सारा असत्य है; देश, काल आदियों की कल्पना द्वारा कल्पित, तथा स्वप्न के सदृश, यह परिदृश्यमान जगत् इस ब्रह्म से भिन्न सत्ता वाला नहीं है ॥ ६३ ॥

ब्रह्मैव सकलं साक्षा दिति निष्ठाऽपरोक्षतः ।
पुमर्थः परमो ज्ञेयः परमानन्दवर्षिणी ॥६४॥

"स्व स्वरूप ब्रह्म ही यह संपूर्ण जगत्," इस प्रकार की परमानन्द को वर्षने वाली अपरोक्ष निष्ठा को ही परम पुरुषार्थ जानना चाहिये ॥ ६४ ॥

विवेक विधुराणां तु क्षुद्रानन्द विधायकाः ।
पुमर्थपद मायान्ति कामिनी काञ्चनादयः ॥६५॥

क्षणिक आनन्द को देने वाले कामिनी काञ्चन आदि ही विवेक रहितों के लिये तो परम पुरुषार्थ भाव को प्राप्त हो जाते हैं ॥६५॥

पूर्वप्रज्ञावशादेवं सस्पृहो वाऽस्तु निः स्पृहः ।
श्रद्धयाऽऽराधयन् देवी मुत्तमां गति मृच्छति ॥६६॥

पूर्व संस्कार से इस प्रकार सकाम हो या निष्काम, श्रद्धापूर्वक देवी की आराधना करने वाला श्रेष्ठ गति को प्राप्त हो जाता है ॥६६॥

एक मेव परं तत्त्वं ब्रह्म चेश्वर पूरुषौ ।
शिवो विष्णुश्च गंगा चेत्याख्याभेदैः प्रकीर्त्यते ॥९७॥

एक परम अद्वितीय तत्त्व को ही ब्रह्म, ईश्वर, पुरुष, शिव, विष्णु, गंगा इत्यादि अनेक नामों से ऋषि लोग व्यपदेश करते हैं ॥९७॥

असारे खलु संसारे सारं सत्यञ्च किञ्चन ।
अन्यत् किमस्ति संप्रार्थ्यं प्रार्थ्यतेऽथापि मोहतः ॥९८॥

अहो ! निःसार इस संसार में ईश्वर के सिवाय प्रार्थना करने योग्य, सार और सत्य वस्तु अन्य क्या है ? तथापि अविवेक से लोग प्रार्थना करते हैं ॥ ९८ ॥

भक्तिं कुर्वन्तु मनुजाः कथञ्चित् परमेश्वरे ।
अर्थकामाश्च सेवन्तां तद्दत्तार्थै स्तमेव हि ॥९९॥

मनुष्य क्लेश करके भी परमेश्वर में भक्ति बढ़ावें । अर्थ कामी लोग भी परमात्मा की कृपा से प्राप्त हुए धन से उस परमात्मा की ही सेवा करें ॥ ९९ ॥

ईश्वरः कल्पतरुवत् कामितार्थ प्रदायकः ।
सर्व शक्तं तमुत्सृज्य कंयाति शरणं नरः ॥१००॥

ईश्वर कल्पवृक्ष के समान अभीष्ट विषयों को प्रदान करने वाला है। सर्व शक्तिमान उनको छोड़कर मनुष्य किस की शरण में जाता है ॥ १०० ॥

अहं पिताऽस्य जगतो मत्पिता परमेश्वरः ।
फलदाता च सर्वज्ञः सर्वेषां सर्व बुद्धिगः ॥१०१॥

मैं इस जगत का स्रष्टा हूं; हमारा भी स्रष्टा परमेश्वर है। सर्व

बुद्धियों में स्थिति करने वाले अन्तर्यामी सर्वज्ञ वे ही सब प्राणियों को कर्म फल देते हैं ॥ १०१ ॥

शक्ति र्न चेत् पृथक् शक्ताद् गंगैवेश्वररूपिणी ।
ता मेतु शरणं मर्त्यो मातरं स्वेष्ट सिद्धये ॥१०२॥

यदि शक्ति शक्तिमान से भिन्न नहीं है, तो श्री गंगाजी परमेश्वर रूपिणी ही हैं। मनुष्य अपनी इष्ट सिद्धि के लिये उस जगन्माता की शरण में जावें ॥ १०२ ॥

यः पठेच्छृणुयाद्वापि, संवाद मिममावयोः ।
गंगोत्तरपरं पुण्यं, सोऽपि याति परां गतिम् ॥१०३॥

और जो हम दोनोंके इस गंगोत्तरी विषयक पुण्यप्रद संवाद का पाठ अथवा श्रवण करे, वह भी परम गति को प्राप्त होता है ॥ १०३ ॥

भद्रं भवतु ते पुत्र ! भद्रञ्च जगतोऽनिशम् ।
इत्युक्त्वा सर्वतो भद्रं, विधिश्चोपरराम ह ॥१०४॥

हे पुत्र ! तुम्हारा सर्वदा कल्याण हो। और संपूर्ण जगत्का भी सर्वदा कल्याण हो ! इस प्रकार सबका सब प्रकार कल्याण कहकर, ब्रह्माजी तूष्णीं भाव, यानी आनन्दमय शांत भावको प्राप्त हुए ॥१०४॥

गंगे ! मात र्नमस्तुभ्यं, गंगे ! मातर्नमोनमः ।
पावनी पतितानां त्वं पावनानां च पावनी ॥१०५॥

हे गंगे ! हे माता ! तुमको नमस्कार हो ! हे गंगे ! हे माता ! तुमको बारम्बार नमस्कार हो ! तुम पतितोंको पवित्र करने वाली हो ! और पवित्रोंको भी पवित्र करने वाली हो ॥ १०५ ॥

**इति श्रीनारदोगंगां, गायन्गायन् मुहुर्मुहुः ।**
**पितरञ्च नमस्कृत्य, निर्जगाम सभान्तरात् ॥१०६॥**

इस प्रकार श्री नारदजी बारम्बार श्री गंगाजीका माहात्म्य गाते हुए, पिता ब्रह्माजीको नमस्कार कर, उस महासभाके मध्यसे चले गये ॥ १०६ ॥

**नमस्तुभ्यं महाभागे ! भगीरथ रथानुगे ।**
**नमस्तुभ्यं जगन्नाथे ! गंगे ! त्रिपथगामिनि ! ॥१०७॥**

हे महाभागे ! हे भगीरथ के पीछे चलने वाली ! तुझको नमस्कार हो ! हे जगदीश्वरी ! हे गंगे ! हे त्रिपथ गामिनी ! अर्थात् तीन मार्गसे चलने वाली ! तुझको नमस्कार हो ! ॥ १०७ ॥

**विश्वेश्वर प्रेरणयैव कृत्वा**
**विश्वेश्वरीक्षेत्रमहत्त्वमेतत् ।**
**विश्वेश्वरायैव समर्पितं तद्**
**विश्वेश्वरप्रीतिकृदस्तु नित्यम् ॥ १०८ ॥**

यह श्री विश्वेश्वरी गंगाजीके क्षेत्रका माहात्म्य साक्षात् श्री विश्वनाथजीकी प्रेरणासे ही रचकर, श्री विश्वनाथजीको ही समर्पण किया गया है । यह सर्वदा श्रीविश्वनाथजी को प्रीतिकर हो ॥१०८॥

इति श्रीगंगोत्तरीक्षेत्रमाहात्म्ये श्रीगोमुखमार्कण्डेयादि
तीर्थवर्णनं नाम द्वितीयः खण्डः समाप्तः ॥





श्री गोमुख गुहा



ध्यानावस्थित
श्री स्वामी तपोवनम्
गङ्गोत्री – १९५२

# ❀ प्रस्तावना ❀

श्री गोमुखी यात्रा की प्रथमावृत्ति सन् १९३५ ई० में प्रकाशित हुई थी। परन्तु हिन्दी अनुवाद न होनेके कारण संस्कृत न जानने वाले पाठकों के लिये इसकी उपयोगिता कुछ कम हो गई थी। इसलिये इस वार अनुवादके सहित इसे प्रकाशित करनेका उत्साह किया। और गंगोत्तर एवं गोमुखके महत्वका उल्लेख करने वाले कुछ श्लोक भी पूज्य श्री स्वामीजी से ही रचित श्री गंगास्तोत्रसे उद्धृत करके इसमें संयोजित किये हैं।

प्रकृत श्लोकोंका अनुवाद दो साल पहले चातुर्मास्यमें श्री गोमुख स्थानमें पूज्य स्वामीजीके साथ निवास करते समय स्वामीजीके चरणोंमें ही बैठकर लिखा था। आशा है इस रूपमें यह छोटा ग्रन्थ गंगाजी तथा हिमालयके प्रेमियोंके लिये महान् उपकारक एवं हर्षदायक होगा।

श्री स्वामीजीके संस्कृत भाषामें लिखित जीवन चरित्रमें लिखते हैं कि :—

**अष्टादशे वयसि तेन विभाकराख्यं**
**काव्योत्तमं व्यरचि केरल गीर्मयं यत्।**
**अस्तावितस्य कविभिः कवितानुरक्तिः**
**प्रावादि हृष्ट मनसा विजयाय चाशीः ॥**

अठारह सालकी आयुमें ही काव्य रचनामें प्रवृत्त होकर विद्वत्प्रशंसाके पात्र हुए, स्वामीजीकी विख्यात तूलिकासे निस्सृत इन पद्योंके माधुर्य तथा गुण पुष्कलताके विषयमें क्या कहना? सहृदयोंके

हृदय ही इसमें प्रमाण है। किञ्च गोमुखके बारे में कुछ लिखनेका अधिकार भी प्रतिवर्ष गोमुख प्रान्तमें जाकर निवास करने वाले, साक्षात् अनुभवी श्री स्वामीजीसे बढ़कर अन्य किसको होगा ?

कहनेकी आवश्यकता नहीं कि इस हिमालय प्रान्तमें श्री स्वामी जी के निवाससे, तथा श्री गंगोत्तरी क्षेत्र माहात्म्य, गोमुखी यात्रा, एवं सौम्य काशीश स्तोत्र, बदरीश स्तोत्र, आदि नाना सरस सद् ग्रन्थोंकी रचनासे भी, श्री गंगोत्तरी एवं गोमुख जैसे पुण्य क्षेत्रोंका तथा उत्तरा खण्डका महत्त्व विशेष काफी प्रचरित हुआ है। इसलिये हम सब और उत्तरा खण्ड एवं गंगाजीके भक्त वर्ग भी श्री स्वामीजीके सदा कृतज्ञ और ऋणी हैं। श्री स्वामीजीके पूजनीय चरण कमलोंमें श्रद्धा और भक्ति होनेके लिये भी इससे बढ़कर और क्या हेतु चाहिये ?

उत्तरकाशी
२५-१२-१९४५

इति सुधीजन विधेय
पं० बृन्दाप्रसाद पण्डा
श्री गंगोत्तरी, हिमालय

# PREFACE *

Gomukh is situated in the icy regions of Himalayas nearly 18 miles up from the famous Gangotri. It is the real source of the holy Ganges. The Ganges is invisible beyond Gomukh on account of the eternal snow. The path from Gangotri to Gomukh is extremely difficult and dangerous also. But the natural scenery of the place is marvellous, sublime, divine and unprecedented. Here the spiritual vibrations are indeed thrilling and highly elevating. One is in tune with the nature and the Nature's Lord and enters into the meditative mood without any effort.

I, after my first visit to Gomukh in 1932, composed these slokas in a religious and poetical style from my impressions of the place. I was extremely Joyful and inspired by the Divine beauty and sanctity of the place during my journey up and down.

May these slokas bring such a divine joy, supreme bliss and inspiration to the readers also.

Uttar Kashi
1-12-1935

SWAMI THAPOVANAM.

---

* प्रथमावृत्तिकी प्रस्तावना

# श्रीगोमुखीयात्रा ।

---

वन्दे वन्द्यपदाम्बुज द्वयममुं राजन्यवीराग्रणीं
यस्यैकाग्रमहोग्रदीर्घतपसा नैस्तुल्यसीमाजुषा ।
क्षेत्रं गोत्रवरेण्यमूर्द्धगमिदं जेजीयतेऽत्राच्युत-
क्षेत्रस्पर्धि समस्तमस्तकनतं गंगोत्तरख्यातिमत् ॥१॥

श्री गंगाजीकी साक्षात् उत्पत्ति स्थान गोमुखी अथवा गोमुख श्री गंगोत्तरीसे लगभग १७-१८* मील आगे है, इस गोमुखके मार्गका वर्णन करनेकी इच्छासे पहले पूज्य स्वामीजी प्रथम श्लोकसे राजा श्रीभगीरथको नमस्कार करते हैं :—

वीर पुरुषोंमें जो श्रेष्ठ हैं और जिनके दोनों चरण कमल बन्दनीय हैं, ऐसे उन राजा भगीरथको मैं नमस्कार करता हूं, जिनकी निस्तुल एकाग्र महान् घोर और चिरकालीन तपस्याके प्रभावसे हिमालयके मस्तक देशमें स्थित यह क्षेत्र वैकुण्ठ सदृश सर्वदेव मनुष्योंके मस्तकसे नमस्कृत होता हुआ गंगोत्तर इस नामसे ख्यातिमान होकर इस भूतलमें सर्वोत्कृष्टतासे विराजता है ॥१॥

धन्ये ! धन्यभगे ! भगीरथशिले ! सौभाग्य भाग्याम्बुधे !
कार्त्तस्न्येन, नमस्करोमि शतश स्त्वत्पादपङ्केरुहम् ।

---

* १८ मील वृद्धोक्तिके अनुसार लिखा करते, आजकल के सर्वे नकशे के अनुसार ११ मील है।

त्वत्पृष्ठे ननु निष्ठुरं नरपतिः स्थित्वा तपस्तप्तवान्
यन्मूलः खलु भूतलेऽमृतधुनी सञ्चार भाग्योदयः ॥२॥

इस श्लोकसे गंगोत्तरी धाममें स्थित श्री भगीरथ शिलाके लिये नमस्कार करते हैं :—

हे धन्ये ! हे धन्य आकार वाली भगीरथ शिले ! हे सौभाग्य तथा भाग्यको महान् अम्बुधे ! कृतज्ञमात्रसे शत सहस्त्रवार तुम्हारे चरण कमलोंको मैं नमस्कार करता हूं। तुम्हारे पृष्ठदेशमें स्थित होकर राजा भगीरथने प्रचण्ड तपस्या की थी, जिस तपस्याका महिमासे इस मृत्युलोकमें श्री गंगाजी के आगमनका भाग्योदय हुआ ॥२॥

लक्ष्मीःक्रीडति यत्र तत् सुरभिलं पश्यामि लक्ष्मीवनं
भुञ्जे चित्रविचित्रदृश्यसुषमां पञ्चेन्द्रियाह्लादिकाम् ।
दुःखास्पृष्टसुखं सुयोगिसुलभं स्वर्गेऽपि यद्दुर्लभं
तन्मेभाति च चित्तसंयममहायासं विनाप्यञ्जसा ॥३॥

अथ इस श्लोकसे श्रीगोमुखके मार्गमें श्रीगंगोत्तरीके निकटस्थ लक्ष्मी वनका वर्णन करते हैं :—

जहाँ सर्वदा साक्षात् श्रीलक्ष्मीजी विहार करती हैं उस मनोज्ञ सुरभिल लक्ष्मीवनको मैं आगे देख रहा हूँ, और उसमें चक्षुरादि पांच इन्द्रियोंको भी आनन्द देनेवाली आश्चर्यदायक नाना दृश्योंकी शोभाको मैं अनुभव कर रहा हूँ। अहो ! दुःखके स्पर्शसे शून्य स्वर्गमें भी दुर्लभ महान् योगी जनोंको ही सुलभ जो अलौकिक सुख है, वह चित्तनिरोधके महान् क्लेश बिना ही मुझे प्राप्त हो रहा है। इस लक्ष्मीवनको गंगावनके नामसे भी निर्देश करते हैं ॥३॥

एतादृक्षवनान्तरेषु नितरां वैरक्त्य योगेन ये
रागद्वेष भयाकुलं जगदिदं विस्मृत्य निर्वासनाः ।
दीव्यद्दिव्यविचित्रसृष्टिरचनामाहात्म्यतस्तत्पतिं
ध्यायन्तःशिवमद्वितीय मृषयो जीवन्ति तेभ्यो नमः ॥४॥

प्रकृत श्लोक से प्रसंगवश एकान्तवासी ब्रह्मनिष्ठ महात्मा पुरुषों के लिये नमस्कार करते हैं :—

ऐसे महान् वनान्तरों में जो ऋषिलोग अत्यन्त वैराग्य भावमें निष्ठित होकर और राग द्वेष भयसे सम्पूर्ण इस जगतका विस्मरण करके वासनाओंके उच्छेदपूर्वक नाना प्रकारकी दिव्य उज्ज्वल इस सृष्टि रचनाके वैशिष्ट्यको देखकर उसके रचयिता अद्वितीय परमात्माको ध्यान करते हुए निवास करते हैं, उनके लिये नमस्कार है ॥४॥

नालं दुष्कृत दूषितः खलु पुमां स्त्वत्पार्श्वमागन्तुम-
प्यन्तर्द्वारसुवा कथ नु स भवत्प्रोत्क्रान्तये स्यात्प्रभुः ।
आख्यानं तु तवाघमर्द्दिनि ! शुभे ! सम्पन्नमेतत्कथं
मन्ये मूढ़परंपरेति सुतरां गौरीत्वदर्थोज्झितम् ॥५॥

और इस पद्यसे एक मील कुछ आगेकी अघमर्द्दिनी नामक गुफाका वर्णन करते हैं । मार्गमें इस गुफाको उल्लंघन करना पड़ता है । पहले इस गुफाको लांघना कुछ अधिक कठिन था, आजकल कठिनाई कुछ कम होती जा रही है :—

अल्प पापसे भी दूषित पुरुष तुम्हारे निकट पहुंचनेके लिये भी समर्थ नहीं होता, फिर तुम्हारे अन्दरके छिद्रसे तुम्हारा अतिक्रमण करनेके लिये वह कैसे समर्थ होगा ? हे शुभे ! अघमर्द्दिनी अर्थात् तुम्हारे

जठर द्वारा तुम्हें लंघनेवालेका पाप नष्ट करनेवाली, इस प्रकारका नाम तुम्हें कैसे प्राप्त हुआ ? मैं मानता हूँ कि केवल मूढ़ परम्परासे ही यह नाम आगत हुआ; क्योंकि काली कन्याको गौरी नामसे व्यपदेश करना जिस प्रकार अर्थ शून्य है, उसी प्रकार तुम्हारा यह नाम भी अर्थ शून्य है। भाव यह है, कि महा सुकृती लोग ही इस गुफाके द्वारा ऊपर यात्रा करनेमें सामर्थ्यवान होते हैं, पापी नहीं ॥ ५ ॥

**सूर्यस्पर्शिशिलोच्चयोच्चशिखर प्रौढच्छविच्छायया**
**नानावर्ण युतं नितान्तनिपतन्नीचैर्महारंहसा ।**
**हैमं हेमनिभं सुमञ्जु सुमनो गङ्गाख्यमेतज्जलं**
**स्वस्मिन्मां निरुणद्धिहन्त न इतोगन्तुं समर्थोऽस्म्यहम् ॥६॥**

दो मील आगे जाकर देवघाट नामसे प्रसिद्ध देवगंगाका इस पद्यसे वर्णन करते हैं :—

महान् उच्च शिखरोंमें सूर्य किरणोंके स्पर्शसे उत्पद्यमान प्रौढ़ कान्तिके प्रति बिम्ब से रक्त नीलादि नाना वर्णवाला होता हुआ, बड़े वेगसे सर्वदा नीचे गिरनेवाला सुवर्ण सदृश मनोहारी देवगंगा नामक यह हिमजल अपने महान् सौन्दर्यमें मुझको निरोध करता है, अतएव यहांसे आगे पदन्यास करनेके लिये मैं समर्थ नहीं होता हूँ ॥ ६ ॥

**भ्रातर्भूर्ज ! नमस्कृति स्तवपदे पुण्यातिपुण्यात्मन-**
**स्त्वां निन्दन्ति कुयोनिरिति ये धिक्तान् सुधीमानिनः ।**
**स्थावर्यं तव गाङ्गनीरलहरीसंघट्टिताङ्गस्य य-**
**द्धन्यं धन्यमतीवधन्यममरेन्द्राद्यैश्च संप्रार्थितम् ॥७॥**

यहांसे भी आगे जाकर "भूर्जवासा" में गंगा किनारे खड़े हुए एक भूर्जवृक्षको देखकर भक्तिपूर्ण भाषामें उसका वर्णन करते हैं :—

हे भाई भूर्ज्ज ! सुकृतियोंसे भी महा सुकृती तुम्हारे चरणोंमें अनेक वार नमस्कार है; निकृष्ट स्थावर योनि कहकर तुम्हारी जो निन्दा करते हैं या तिरस्कार करते हैं, उन पण्डिताभिमानियोंको धिक्कार है। क्योंकि गंगाजलके प्रवाहसे सर्वदा संघट्टित हुआ अङ्ग जिसका ऐसे जो तुम्हारा स्थावरपना है, वह धन्य है, अत्यन्त धन्य है, अति दुर्लभ है, इन्द्रादि देवताओंसे भी सम्प्रार्थित है ॥ ७ ॥

आकीर्णा बहुगण्डशैलशिशुभिः प्रालेयसङ्घैस्तथा
विस्तीर्णा खलु सञ्चकास्ति पुरतः श्री पुष्पवासस्थली ।
आपूर्णा चमहाद्भुतैर्द्युतिमयैर्दिव्य प्रसूनैर्नृणा
मानन्दामृतवर्षिणी दिविपदां श्रीनन्दनोद्यानवत् ॥८॥

आगे श्रीगोमुखके निकटस्थित पुष्पवास ( फूलवासा ) नामक विशाल मैदानका इस श्लोकसे वर्णन करते हैं :—

बहुत क्षुद्र पाषाणोंके और हिमखण्डोंके समूहसे व्याप्त, अति मनोहर तथा विस्तीर्ण यह पुष्पवास स्थान यहां आगे विराजमान है; जो महान् अद्भुत शोभायमान नाना प्रकारके दिव्य पुष्पोंसे परिपूर्ण होता हुआ देवताओंको जिस प्रकार नन्दनोद्यान है, उस प्रकार सदा मनुष्यों को आनन्दरूपी अमृतकी वर्षा करता रहता है ॥ ८ ॥

तीर्थानामपि तीर्थमुत्तममिदं पुंसांपुमर्थप्रदं
रम्याणामपि रम्यमद्भुतयशः पूतात्प्रपूतंमहत् ।
साक्षाद्विष्णुपदोद्भवं हिमगुहाच्छिद्रेण चात्रोदितं
गंगामूलमनन्य भक्ति सुलभं श्रीगोमुखाख्यं भजे ॥९॥

अब इस श्लोकसे साक्षात् श्रीगोमुखका वर्णन करते हैं :—

सर्व तीर्थोंमें भी उत्तमतीर्थ मनुष्योंको धर्म, अर्थ, काम और मोक्ष देने वाले, अत्यन्त रमणीय एवं अद्भुत चरित्र वाले, पवित्रसे भी महान् पवित्र, साक्षात् विष्णु चरणसे उत्पन्न होकर हिमगुहाके छिद्रसे प्रकट हुए और अनन्य भक्तिमात्रसे सुलभ श्रीगोमुख नामक इस दिव्य गंगाजीके मूल स्थानका मैं आसेवन करता हूँ ॥ ६ ॥

गंगे! गोमुखि! तुभ्यमस्तु मनसा वाचा च तन्वा नम-
स्त्वां दृष्ट्वा तव निर्मलेऽमृतसमे स्नात्वा च भद्रे जले।
मन्ये धन्य जनिर्ममेति सुतरां धन्योऽस्मि धन्योऽस्म्यहं
भूयो भूयइवानतोऽस्मि चरितार्थोऽस्मि त्वदासेवनात् ॥१०॥

और अन्तमें इस श्लोकसे गोमुखके प्रति नमस्कार पूर्वक अपनी कृतार्थताको प्रकट करते हैं :—

हे गोमुखि! हे गंगे! तुम्हें मनसे शरीरसे तथा वचनसे भी नमस्कार है। मैं मानता हूँ कि तुम्हारा दर्शन करके और तुम्हारे निर्मल अमृत तुल्य तीर्थजलमें स्नान करके मेरा जन्म अतीव धन्य हुआ। मैं धन्य हूँ, मैं अतीव धन्य हूँ, फिर भी बार बार तुम्हें नमस्कार करता हूँ। इस प्रकार तुम्हारे आसेवनसे मैं अत्यन्त कृतार्थ हूँ ॥ १० ॥

---

## श्रीगंगास्तोत्रसंग्रहः।

**जय जय जगदम्ब! श्रीगल श्रीजटायां**
**जय जय जयशीले! जह्नुकन्ये! नमस्ते।**

जय जय जलशायि श्रीमदंघ्रिप्रसूते !
जय जय जय भव्ये ! देवि ! भूयो नमस्ते ॥१॥

हे जगदम्बे ! तेरी जय हो ! जय हो ! श्री कंठ शिवजीकी तेजोमय जटामें विराजमान, हे जह्नु कन्ये ! तेरी जय हो ! तुमको नमस्कार है। श्री विष्णुजीके चरणकमलसे उत्पन्न हे देवि ! हे मंगल स्वरूपिणि ! तेरी अनेक बार जय हो ! और तुम्हें अनेक बार नमस्कार है ॥ १ ॥

त्रिपथ पथिक पाथः स्रोतसा सिद्धमूर्ति-
र्दिनकर कुलभूषारत्न यत्नोदयोत्था ।
प्रणतजन सुरद्रुः पावनी पावनानां
जयति जगति गङ्गा भाग्यपूगोजनानाम् ॥२॥

स्वर्ग लोक, भूलोक, पाताल लोक इन तीन लोकोंमें चलनेवाला जलस्रोत ही जिसका प्रसिद्ध आकार है; सूर्यकुलके भूषणमणि भगीरथजी की महान् तपस्यासे जो यहां प्रकट हुई है, जो भक्तजनोंको कल्पवृक्षके तुल्य हैं, जो सर्व पवित्र वस्तुओंको भी पवित्र करनेवाली है, और जो मूर्तिमान हुए मनुष्योंके भाग्य समुदाय की भांति भासती है, वह गंगा इस लोकमें सर्वोत्कृष्ट विराजती है ॥ २ ॥

गंगे ! मातरनुस्मरामि सततं त्वन्मूर्ति मत्यङ्कुतां
दैवीं दैवतदुर्लभां यमुनया वाचाऽन्न संपूर्णया ।
भक्तेनाथ भगीरथेन भगवत् पादैश्च पादार्चकै-
र्या नित्य समुपाश्रिता विजयते गङ्गोत्तरी सद्मनि ॥३॥

इस श्लोकसे श्री स्वामीजी महाराज गंगोत्री मन्दिरके अन्दर अन्य देवताओंके सहित विराजमान श्रीगंगाजीका स्मरण करते हैं :—

हे गंगे ! हे माता ! इन्द्रादि देवताओंको भी अति दुर्लभ; अत्यन्त अद्भुतदायक तुम्हारे इस दैवतरूपका मैं अनुस्मरण करता हूँ, जो यमुनाजी, सरस्वती, अन्नपूर्णा, भक्त भगीरथ और तुम्हारे पादपूजक भगवत्पाद श्री शङ्कराचार्यसे भी सर्वदा भक्ति सहित उपासित होता हुआ, गंगोत्तरी धाममें सम्पूर्ण महिमासे विराजता है ॥ ३ ॥

तुहिन शिखरिशृंगे दिव्यसौभाग्यसंप-
न्महिमनि विहरन्तीं पुष्पवासे विशाले ।
सुकृति समधिगम्ये सम्यगालीजनाली-
त्रिदसितमलसाक्षीं नौमि गंगामभीक्ष्णम् ॥४॥

अनन्तर अब इस पद्यसे गोमुखके पुष्पवास स्थानमें क्रीड़ा करने वाली श्री गंगाजीकी स्तुति करते हैं :—

अलौकिक सौन्दर्य सम्पत्तिके माहात्म्यसे युक्त हिमालयके शिखर पर पुण्यवान पुरुषोंको ही गम्य, विशालमञ्जुल फूलवासा मैदानमें अनेक सखियोंके सहित सविलास विहार करने वाली, और कमनीय कान्ति वाली श्री गंगाजीकी सदा मैं स्तुति करता हूँ ॥४॥

पादांगुष्ठाद्वोदिता देवि ! विष्णो
र्गङ्गोत्तर्यां गोमुखी मस्तकाद्वा ।
गंगा गंगैवास्य बाधो न किञ्चित्
सर्वेशित्री सर्वथा हि त्वमम्ब ! ॥५॥

हे देवि ! तुम विष्णुके पादांगुष्ठसे उत्पन्न हो; अथवा गंगोत्तरी में गोमुख के ऊर्ध्व देशसे उत्पन्न हो । तुम गंगा तो सर्वदा गंगा ही हो, तुम्हारे महत्त्वकी ईषण्मात्र भी हानि नहीं; हे अम्ब तुम सर्वथा सर्वेश्वरी ही हो ॥ ५ ॥

अयि भगवति ! भव्य श्रीमुख श्रीनितम्बे
तुहिन मुकुर हर्म्यस्यान्त रन्तर्वधू वत् ।
अहह ! चरसि चित्रं त्वंतु माता जगत्या-
स्तदपि कथमसूर्यं पश्यतां यासि सह्रीः ॥६॥

गोमुखसे ऊपर गंगाजीके दर्शन नहीं मिलते हैं। उधर श्रीमुख नाम पर्वत पङ्क्तियोंके नीचे अनेक मील हिम संघातके भीतर गंगाजीकी धारा दूरसे आ रही हैं, इसको अलंकार भाषामें दो श्लोकोंसे वर्णन करते हैं :—

हे भगवती! भागीरथी! दिव्य मंगलमय श्रीमुख पर्वतके मनोहर नितम्ब देशमें हिमरूपी कांचके महलके अन्दर नवोढा अन्तःपुर वधूकी न्याई अहह! तुम विचरती हो! यह महान आश्चर्य है कि तुम तो सर्व जगतकी जननी हो! तथापि लज्जायुक्त होकर तुम किस प्रकार सूर्य को नहीं देखने वाली अवरोध स्त्री-सी बन जाती हो!

गोमुखके ऊपर चाररंग वाली चतूरंगी नामक हिमधारा जहां गंगोत्तरी हिमधारा नामक गोमुखकी बड़ी हिमधारामें आकर मिल जाती है, उस महान अद्भुत दिव्यप्रान्तको मनमें रखकर इस साहित्यरसपूर्ण सुन्दर श्लोककी रचनाकी गई है। बदरीनाथका महान् दुर्गम हिममार्ग इस प्रान्तसे ही चतूरंगी, कालिन्दी आदि हिमधारा तथा अर्वा नामक जलधारा होकर दिव्य हिममय उच्च पर्वतोंको अतिक्रमण करके आगे सरस्वती नदीके किनारे "माना" ग्रामके समीप "गस्तोली" में जाकर सम्मिलित होता है। और सुमेरु शृङ्गके सदृश सुवर्ण वर्णके महान् ऊंचे अनेक हृदयावर्जक सुन्दर शिखर भी इस प्रान्तसे स्पष्ट रूपसे दृष्टि गोचर होते हैं। विपुल, गंभीर, मनोहर आकार वाली यह गंगोत्तरी हिमधारा आगे सुप्रसिद्ध चौखम्बा शिखरके समीपवर्ती तथा अलकनन्दाके

उद्भव स्थान अलकापुरी पर्यन्त लम्बी पड़ी है। इसका दिव्य सौन्दर्य अनुपम और अवर्णनीय हैं। इस हिमधाराके किनारे ही आसपास शिवलिङ्ग, श्रीसुमेरु केदारनाथ आदि तथा भागीरथी पर्वत, सत्यपथ शिखर आदि पुराण प्रसिद्ध, बहुत सुन्दर दिव्यतर हिम शिखर भी विराजमान हैं। ये सब शिखर गोमुखसे दृश्यमान न होने पर भी अन्य प्रान्तोंसे दृष्टिगोचर होते हैं।

पापे मुखं समभवत् खलु नील नीलं
यस्यांऽम्ब ! तस्य तव वेश्म निरीक्षणेन।
श्रीमन्मुखं भवति भास्कर भासि नूनं
मन्येऽर्थवत्तत इदं तव वेश्मनाम ॥७॥

हे अम्ब ! जिसका मुख पाप कर्मोंसे नील वर्ण हो गया है अर्थात् काला पड़ गया है, तुम्हारे इस श्रीमुख स्थानके दर्शनसे ही उसका मुख सूर्यके सदृश तेजोमय और श्रीयुक्त अवश्य हो जाता है। इस कारणसे मैं मानता हूं कि श्रीमुख करके तुम्हारे स्थानका यह नाम अर्थ रहित रूढ़ि नहीं, किन्तु सार्थक ही है॥ ६॥

प्रसीद भगवत्यंब ! प्रसीद करुणांबुधे !
पुनीहि स्वात्मतुल्यं मे मनो मलमलीमसम् ॥८॥

हे माता ! हे भगवती ! तुम प्रसन्न हो ! हे करुणा जलधे ! तुम प्रसन्न हो ! रागद्वेषादि नाना मलोंसे मलीन हुए हमारे मनको अपने स्वरूपके तुल्य अर्थात् गंगाजलके सदृश पवित्र बनाओ ॥ ८॥

पश्यन्तु केचिदमलं जलमेव गंगे
त्यन्ये वयं तु भवयन्त्रविमुक्तिहेतुः।

श्रीमूल शक्ति रखिले श्वररूपरूपि-
ण्यानन्द कन्दमितिनित्यमुपास्महेत्वाम् ॥६॥

गंगा केवल निर्मल शुद्ध जलप्रवाह मात्र ही है, इस प्रकार कोई लोग माने तो मानें; हम तो संसार यन्त्रसे विमोचनका हेतु जगतकी कारणभूता आदि शक्ति, साक्षात् परमेश्वर स्वरूपिणी, निरतिशयानंदघन, जगजननी देवीके रूपसे भक्ति पूर्व तुम्हारी उपासना करते हैं ॥ ६ ॥

किंवा मुण्डनतः किमस्ति जटया वैवर्ण्यवस्त्रेण किं
किंवा वस्त्र विसर्जनेन भसितालेपेन जापेन किम् ।
भिक्षान्नाशनतश्च किं व्रतशतै स्तीर्थेषु चाटाट्यया
विश्वाधीश्वरि!युष्मदंघ्रियुगलेभक्तिर्न चेन्निश्चला ! ॥१०॥

हे विश्वेश्वरि ! हे गंगे ! तुम्हारे चरण युगलमें निश्चल भक्ति न हो तो फिर मनुष्यको सिरका मुण्डन करनेसे क्या ? जटा रखनेसे क्या प्रयोजन ? काषाय वस्त्रके धारण करनेसे क्या ? वस्त्रको छोड़कर नंगा बननेसे क्या ? सम्पूर्ण शरीरमें भस्मका लेपन करनेसे क्या ? दिन रात बैठकर जप करनेसे भी क्या प्रयोजन ? भिक्षान्न का भोजन करनेसे भी क्या ? नाना प्रकारके व्रत और उपवासादिकोंसे क्या ? और तीर्थोंमें बहुवार भ्रमण करनेसे क्या ? भाव यह है कि जिसके मनमें भक्ति का संचार नहीं है, उसको पूर्वोक्त नाना वेष धारण तथा नाना आडम्बर ये सब व्यर्थ ही हैं ॥ १० ॥

गुहाच्छिद्रे वाद्रेः शिखरभुवि वा घोर गहने
श्मशाने वैकाकी वसतु वसतौ वा निजजनैः ।
महाभागे ! भागीरथि ! तव पदांभोजभजन
प्रमत्तंचित्तश्चेत् सतु परमयोगी सतु सुखी ॥११॥

गुहाके छिद्रमें अथवा पर्वतके उच्च शिखर देशमें अथवा भयंकर जंगलमें अथवा श्मशान भूमिमें एकाकी होकर निवास करो, अथवा अपने परिजनोंके साथ अपने गृहमें निवास करो। हे महाभागे ! हे मातृगंगे ! तुम्हारे चरणकमलके भजनमें यदि चित्त निमग्न हुआ हो तो, वही महान् योगी हैं; वही परम सुखी है ॥ ११ ॥

मंगला मंगलानां या पावनानां च पावनी ।
भुक्तिदा मुक्तिदा चास्यै जह्नुजायै नमो नमः ॥१२॥

जो सर्व मंगल मूर्तियोंकी भी मंगल मूर्ति है, सर्व पावन वस्तुओं की भी पावनी है, भुक्ति और मुक्ति प्रदान करनेवाली उस जाह्नवीको बार बार नमस्कार है ॥१२॥

प्रातः सायं दिनमथनिशा माससंवत्सरैश्चे
त्येवंकालः प्रचलति चलत्यायुरप्युग्रवेगम् ।
क्षुद्रान् भोगान् त्यजतु भजतु श्रीपदं प्रेमतोऽन्तः
स्वर्गंगायाः श्व इतिमति मान् मानवो मा ब्रवीतु ॥१३॥

प्रातः और सायं, दिन तथा रात्रि, मास और संवत्सर इस प्रकार काल व्यतीत होता है, एवं मनुष्यकी आयु भी अत्यन्त उग्र वेगसे चलती रहती है। क्षुद्र भोगोंका त्याग करो; भक्ति पूर्वक सुरनदी श्री गंगाजीके श्रीपदका भजन करो; बुद्धिमान मनुष्य आज नहीं कल करेंगे ऐसा कभी न कहे ॥१३।

प्रसीद गंगे ! भगवत्यभीक्ष्णं त्वत्प्रेमयाचेऽन्यदहं नयाचे ।
त्वदंबुधारावदखंण्डरूपं प्रसीदभूयोऽपि नमोंऽघ्रिपातैः॥१४॥

हे गंगे ! हे भगवती ! तुम प्रसन्न हो। बार बार तुम्हारी जल धाराकी न्याई अखण्ड रूप तुम्हारी भक्तिकी प्रार्थना करता हूँ, और कुछ

भी मैं याचना नहीं करता। चरणोंमें गिरकर अनेकानेक बार नमस्कार करता हूँ तुम प्रसन्न हो ॥१४॥

गंगोत्तर्यामिह गिरिगुहावेश्मनि त्वत्पदान्ते
पाद्म पीठे स्थिरमृजु कदा संस्थितः सन् सुखेन ।
न्यस्तस्वान्तस्त्वयि शिवतनो ! देवि ! कस्तूरिकाणां
संघर्षाश्मायित मिदमहं विस्मरिष्यामि देहम् ॥१५॥

हे मंगल मूर्ति ! हे देवि ! यहां श्रीगंगोत्तरीमें गिरि गुहाके अन्दर तुम्हारे चरणोंके समीप पद्मासनमें ऋजु और स्थिर रूपसे सुखतया अवस्थित होकर तुम्हारे स्वरूपमें चित्तका निरोध करता हुआ शिलाके सदृश स्तब्ध, निश्चल, तथा कस्तूरी मृगोंके कण्डूयन क्रीड़ाका स्थान हुए इस देहको मैं कब विस्मरण करूंगा ॥ १५ ॥

* इति शुभम् *



# पूज्य श्री तपोवन स्वामिपाद प्रणीत, संस्कृत पुस्तकें

| | | |
|---|---|---|
| ईश्वरदर्शनम् अथवा श्री तपोवनचरितम् - प्रथमः खण्डः | | २) |
| ,, ,, ,, द्वितीयः | ,, | ५) |
| श्री सौम्य काशीशस्तोत्रम् (हिन्दी भाषा व्याख्यान के सहित) | | ३) |
| श्रीगङ्गोत्तरीक्षेत्रमाहात्म्यम् (श्री गोमुखीयात्रादिसंवलितम्) | ,, | १) |
| श्रीबदरीशस्तोत्रम् | ,, | ॥) |
| श्रीगङ्गास्तोत्रम् | | ॥) |
| श्रीगङ्गासहस्रनामस्तोत्रम् (श्रीतपोवनीय गङ्गास्तोत्र संक्षेप सहितम्) | | ॥) |
| श्रीतपोवन शतकम् (पण्डित श्री बाल कृष्ण भट्ट शास्त्रि कृतम्) | | ॥) |

मिलने का पता :—

**पण्डित शशिधर**

गङ्गोत्री धाम

पो० गङ्गोत्री, ज़िला टिहरी गढ़वाल

उत्तर प्रदेश, हिमालय

अथवा

**The Mangalodayam Ltd.**

P.O. Trichur, T. C. State

S. India